मथ द्वादश। धी' पञ्चदश। छन्दषोडश। पाद' परोष्णिक् प्रस्तारपङ्क्ति विंशति विंशतिः एकविंशतिः। देवतादित. अष्टौ। चतु शतं षष्ठ विंशति विंशति। युगपरान्तिका त्रयोदश। वृत्त गवादौ विंशति' विंशतिः। यवमती त्रीणि।

---

तथा शेष मूलस्थाने लघु न्यसेत्। तृतीयादिषु पङ्क्तिष्वेवमेव गुरोरध॥ लघु न्यस्यावशिष्टन्तु पूर्ववत् परिकीर्त्तितम। न्यूने मात्रात्रय देयं तस्मिन्नादौ गुरुर्द्वयो॥ कलयो स्यात्तथा पूर्वं लघुर्द्वयो भवेत्तत। चतुर्थपङ्क्तावप्येवं पञ्चम्यान्तु गुरोरध॥ लघुद्वय लिखेत् पूर्वं शिष्टस्तूपरिवद्भवेत। एव सर्वत्र विज्ञेय, कलप्रस्तार उत्तम॥ तेन द्विगुरुपादस्य पञ्च भेदा भवन्त्यमी। सर्वान्तमध्यादिगुरुस्तुर्लघुगणा, स्मृता॥" इति। षट्कलादिप्रस्तारेषु गणाना पृथक् पृथक् नामादिक तथा प्रस्तारवत् मात्राणां नष्टोद्दिष्टादिकमपि प्राकृतपिङ्गलादौ द्रष्टव्य, ग्रन्थगौरवभयात् नात्र तत् प्रदर्शितमिति।

प्रसङ्गादार्य्यासु नष्टोद्दिष्टे यथा—"एकद्व्यङ्कतृतीयाङ्कानाद्यमात्रात्रये क्रमात। तत पूर्वद्वयोान्त्यस्यानन्ते पृष्टाङ्कलोपनम्॥ पूर्वं पूर्वतरोऽप्यपि लोप' सम्भवतो भवेत्। यस्य यस्य भवेल्लोप तदधो गुरुता भवेत॥ परमात्रात्रयेऽत्यन्त मात्रानष्ट वदेत् सुधी॥" इति। यथा—चतुष्कलप्रस्तारे द्वितीय कीदृग्भेद इति प्रश्ने चतस्र कला पृथक् स्थाप्या, तत प्रथमकलाया उपरि एकाङ्क द्वितीयायाश्च द्व्यङ्क स्थाप्य, तृतीयकलाया उपरि तु पूर्वस्थापितौ द्व्येकाङ्कावेकीकृत्य जातस्त्र्यङ्क निवेश्य, चतुर्थ्याश्च उपरि द्व्यङ्कत्र्यङ्कावेकीकृत्य जात पञ्चाङ्क स्थापनीय। ( १ २ ३ ५ ) पृष्टाङ्कमन्तिमकलोपर्य्यङ्के लोपयेत। तत्रावशिष्टे पूर्वपूर्वाङ्क यथासम्भव लोपयेत। यस्याङ्कस्य लोपस्तदधस्तनमात्रा परमात्रया सह गुरुत्वमायाति। इह तु प्रकृतद्वितीयभेदप्रश्ने अन्तिमपञ्चमेऽङ्के पृष्ट द्व्यङ्क लोपयेत, अवशिष्टे त्र्यङ्के अव्यवहितत्र्यङ्कलोपात त्र्यध स्थितपश्चाद स्थितकलाभ्यामेको गुरु, शेषाङ्को नावशिष्यते इति प्रथम लघुद्वयम। ततश्च प्रथम लघुद्वय ततश्चैको गुरुरिति एतादृशो ( । । ऽ ) द्वितीयो भेद। यथा वा—षट्कलप्रस्तारे द्वितीय कीदृशो गण इति प्रश्ने लघुरूपा षट्कला स्थापनीया, तत पूर्ववत एकद्वित्रिपञ्चाष्टत्रयोदशाङ्का क्रमेण कलानामुपरि देया। ( १ २ ३ ५ ८ १३ ) तत. शेषत्रयोदशाङ्के प्रश्नविषयीभूतं

यति' विंशति। वातोर्मी अष्टादश। प्रहर्षिणी विंशतिः। शार्दूलविक्रीडितं पञ्चदश। अत्रानुक्ता सप्तदश। इत्यष्टादशच्छन्दः समाप्तम्।

---

द्वितीयाङ्कं लोपयेत् तल्लोपे अवशिष्टा एकादश भवन्ति। तत्राव्यवहिताष्टलोपे सति अष्टाध स्थितत्रयोदशाध स्थितकलाभ्यामेको गुरुर्भवति। अवशिष्ट त्रय तत्र पञ्च लोपासम्भवात तृतीयकलोपरिस्थत्र्यङ्कस्य लोपे तृतीयचतुर्थाभ्यामपरो गुरुर्भवति, शेषाङ्को नावशिष्यते १३ – २ = ११ — ८ = ३ — ३ = ० इति प्रथम लघुद्वयमेव। एवञ्च आदौ लघुद्वय ततो गुरुद्वय द्वितीयो गण एतादृश (– – ᴗ ᴗ) भवतीति बोध्यम। उक्त वाणीभूषणे यथा—"नष्टे कृत्वा कला सर्वा पूर्वयुग्माङ्कयोजिता। पृष्टाङ्कहीनशेषाङ्क येन येनैव पूर्य्यते॥ परा कलामुपादाय तत्र तत्र गुरुर्भवेत। मात्राया नष्टमेतत्त फणिराजेन भाषितम॥" इति। एतेनैतदायात भवति—यत्कल प्रस्तारे प्रश्न ता सर्वा कला लघुरूपा कार्य्या। लघुरूपेण लिखितासु तासु क्रमेण प्रथमायामेकाङ्क द्वितीयाया द्व्यङ्क, तृतीयाया त्र्यङ्केकाङ्कमेलनेन त्र्यङ्क', चतुर्थ्यां द्व्यङ्कत्र्यङ्कावेकीकृत्य जात पञ्चाङ्क पञ्चम्यां त्र्यङ्कपञ्चाङ्कावेकीकृत्य जात अष्टाङ्क, षष्ठ्या पञ्चाङ्काष्टाङ्कावेकीकृत्य जात त्रयोदशाङ्क स्थाप्य, एव मुत्तरोत्तर कार्य्यं, शेषे प्रश्नविषयीभूतोऽङ्क लोपनीय, ततश्चावशिष्टे शेषाङ्के अपरे विलोप्या। यो योऽङ्क शेषाङ्के लोपयितु शक्यते स पुन स्वाधःस्थितकला परकलाञ्चादाय गुरुर्जायते इति।

मात्राणामुद्दिष्ट यथा—"उद्दिष्टे नष्टवत्त्र्यस्यान्मात्राणा स्थापन पुन। उद्दिष्टवत्त प्रस्तार लिखित्वोपरि विन्यसेत॥ कलयोराद्ययोरेकद्व्यङ्कावन्त्यकलासु तु। पूर्वपूर्वद्वयो र्मिश्रानङ्कानत्र गुरूपरि॥ अङ्क प्रथममात्राया अपरस्यास्त्वधो गुरो। अत्राङ्कराशिमङ्काना मेकीकृत्य गुरुर्हगात्॥ अङ्कानपनयेदन्त्ये शिष्टन्तूद्दिष्टमुच्यते॥" इति। चतु ष्कलप्रस्तारे आदिगुरु कस्मिन् स्थानेऽस्ति इति प्रश्ने मात्राचतुष्टय पृथक् स्थापयित्वा तदुपरि क्रमेण एकद्वित्रिपञ्चाङ्कान् विलिखेत $\left(\begin{smallmatrix} १ & २ & ३ & ५ \\ - & - & - & - \end{smallmatrix}\right)$ तत अन्तिम-कलोपरिस्थे पञ्चमाङ्के प्रथमकलोपरिस्थ एकाङ्कोऽपनेय, तथा सति चत्वारोऽवशिष्टा भवन्ति इति चतुर्थमादिगुरुस्थानं भवति (ᴗ – –)। एव सर्वत्र ज्ञेयम्। वर्णोद्दिष्ट-व्याख्यानेऽपि प्रसङ्गत मात्रोद्दिष्टलक्षणादिक कथञ्चिदभिहितमिति दिक्।

## मात्रामेरुः।

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| १ | | | | | | | |
| १ | १ | | | | | | |
| २ | १ | | | | | | |
| १ | ३ | १ | | | | | |
| ३ | ४ | १ | | | | | |
| १ | ६ | ५ | १ | | | | |
| ४ | १० | ६ | १ | | | | |
| १ | १० | १५ | ७ | १ | | | |
| ५ | २० | २१ | ८ | १ | | | |
| १ | १५ | ३५ | २८ | ९ | १ | | |
| ६ | ३५ | ५६ | ३६ | १० | १ | | |
| १ | २१ | ७० | ८४ | ४५ | ११ | १ | |
| ७ | ५६ | १२६ | १२० | ५५ | १२ | १ | |
| १ | २८ | १२६ | २१० | १६५ | ६६ | १३ | १ |
| ८ | ८४ | २५२ | ३३० | २२० | ७८ | १४ | १ |

तत्र एककलद्विकलत्रिकलादिषु कति सर्वगुरवः कति चैकगुर्वादय इति जिज्ञासायां तद्बोधायमस्यावतारः। तत्प्रकारस्तु—उपर्य्येकं कोष्ठं लिखित्वा तदधः कोष्ठद्वययुतं पङ्क्तिद्वयम्। तदधश्च कोष्ठत्रययुतं पङ्क्तिद्वयम्। ततः कोष्ठ-

चतुष्टययुत पङ्क्तिद्वयम्। एवं क्रमेण यावदिच्छया एकैकं कोष्ठं वर्द्धयित्वा पङ्क्तिद्वयं लिखेत्। तत्रोपरि पङ्क्तौ एकाङ्कः तदधःस्थाना द्वितीयपङ्क्तीनामाद्यपङ्क्तिस्थ प्रथमकोष्ठेषु च एकैकाङ्का देयः। सर्वस्यामेव पङ्क्तौ शेषकोष्ठेऽपि स एवाङ्कः। अथ-पङ्क्तीनामादिकोष्ठेषु च द्व्यादयोऽङ्का द्वाङ्कक्रमेण स्थाप्या, ततश्च द्वितीय-पङ्क्तिप्रथमकोष्ठे एकाङ्क, तृतीयपङ्क्त्याद्यकोष्ठे द्व्यङ्क, चतुर्थपङ्क्त्याद्ये पुनरेकाङ्क, पञ्चम्याद्ये त्र्यङ्क, षष्ठ्याद्ये पुन एकाङ्कः सप्तम्याद्ये चतुरङ्क, अष्टमपङ्क्त्याद्ये पुन एकाङ्क इति प्रक्रियया आद्यकोष्ठेषु अङ्का देयाः। एवमाद्यन्तकोष्ठपूरणे कृते समान कोष्ठद्वयमध्ये उपरिपङ्क्तिमध्यस्थितशून्यकोष्ठेषु पूरणीयकोष्ठोपरिस्थकोष्ठद्वयाद्यकोष्ठा-ङ्केन तदुपरिस्थितकोष्ठाग्रिमकोष्ठाङ्कमेकीकृत्य योऽङ्कस्तं दद्यात्। द्वितीयपङ्क्तिमध्यस्थ कोष्ठे तु पूरणीयकोष्ठोपरिस्थकोष्ठाङ्केन तदुपरिस्थितकोष्ठद्वयमध्ये अन्त्यकोष्ठाङ्कमेकी-कृत्य दद्यात्। एवं सर्वत्र यावदिच्छं कोष्ठान् विरचय्य मात्रामेरुः कर्त्तव्यः। तथा चोक्तं—"तत्र प्रथमपङ्क्तौ स्यादङ्करूपादस्तु पूर्ववत्। द्वितीयपङ्क्तौ प्रथमादधो लेख्यौ लघुगुरो॥ यथोपरि तथा शेषे मूलस्थाने लघु न्यसेत्। तृतीयादिषु पङ्क्ति ष्वेवमेव गुरोरध॥ लघुं न्यस्यावशिष्टन्तु पूर्ववत परिकीर्त्तितम्। न्यूने मात्राद्वयं देयं तच्चिन्नादौ गुरुद्वयो॥ कल्पयो स्यात्तथा पूर्वं लघुर्देयो भवेत्तत। चतुर्थ पङ्क्तावप्येव पञ्चम्यान्तु गुरोरध॥ लघुद्वयं लिखेत् पूर्वं शिष्टन्तूपरिवद्भवेत्। एवं सर्वत्र विज्ञेयः कलाप्रस्तार उत्तम॥ तेन द्विगुरुपादस्य पञ्च भेदा भवन्त्यमी। सर्वान्तमध्यादिगुरुश्चतुर्लघुगणा स्मृता॥" इति। प्राकृतपिङ्गलेऽपि लक्षणमस्य विहितं यथा—"दुइ दइ कोट्ठा सरि लिहहु पढम अंक तसु अत। तसु आइहि पुणु एक सउ पढमे बे वि मिलत॥ सिरअंके तसु सिरपरअंके उबरल कोट्ठ पुरहु णीमके। मत्तामेरु अंक सचारि बुज्झहु बुअझहु जण दुइ चारि॥" इति। अस्य संस्कृतं यथा—"द्वे द्वे कोष्ठे सदृशे लेखनीये प्रथमोऽङ्कस्तस्यान्ते। तस्यादौ पुनरेकेन समं प्रथमे द्वावपि मिलत॥ शिरोऽङ्केनेषां शिरःपराङ्केरुर्वरितं कोष्ठं पूरय निःशङ्कम्। मात्रामेरुमङ्कं सञ्चारयित्वा बुध्यध्वं बुध्यध्वं जना द्वौ चत्वार॥" इति। अत्रेदमनुसन्धेयं—कति समकले लघव कति च गुरव, कति विषमकले लघव कति च गुरव, कति वा प्रस्तारसङ्ख्या इति प्रश्ने मेरुणा प्रत्युत्तरं देयम्। पूर्वोक्तप्रकारेण कोष्ठपूरणे कृते प्रथमपङ्क्तौ एककलस्य द्वितीयपङ्क्तौ द्विकलस्य तृतीयपङ्क्तौ त्रिकलस्य, चतुर्थ्यां चतुष्कलस्य, पञ्चम्यां पञ्चकलस्य इत्येवं क्रमेण न्यास। तत्रैककले एक एव सर्वलघुरेकलघुरूप। द्विकले एकः सर्वगुरुरेक-गुरुरूप एकः सर्वलघुर्द्विलघुरूप.। त्रिकले सर्वगुर्वभावात् द्वौ एकलघु,

एकगुरु, एकः सर्वलघुः। चतुष्कले सर्वगुर्वात्मक एकः एकगुर्वात्मकास्त्रयः सर्वलघुरेकः। पञ्चकले सर्वगुर्वभावात् द्विगुर्वात्मकास्त्रयः एकगुर्वात्मकाश्चत्वारः सर्वलघुरेकः। षष्ठ्यां षट्कलेषु एकः सर्वगुरुः, षट् द्विगुरवः, पञ्च एकगुरवः, एकः सर्वलघुरित्येव ज्ञेयम्। तत्तत्पङ्क्त्यङ्कानां मेलनेन तत्तद्भेदसङ्ख्याऽपि परिज्ञेया। यथा—षट्कले एकषट्पञ्चैकाङ्कानां मेलनेन जाता त्रयोदशसङ्ख्या, ता एव प्रागुक्तभेदा भवन्ति। एवमन्यत्रापि। अत्र च वामभागे सर्वत्रैकाङ्कस्थले सर्वगुरुः दक्षिणभागे च सर्वत्रैकाङ्कस्थले सर्वलघुरिति बोध्यम्।

अथ प्रस्तारे कृते कुत्र स्थाने सर्वगुरुरस्ति तदपेक्षया एकन्यूनगुरुः कुत्रास्ति तत एकन्यूनगुरुः कुत्रास्ति इत्येवं प्रश्ने तत्स्थानज्ञानार्थं पताकाप्रस्तारः कथ्यते। यत्सङ्ख्याक्षरप्रस्तारे प्रश्नस्तदक्षरसङ्ख्याकान् कोष्ठानेकाधिकान् लिखित्वा एकाङ्कादारभ्य उत्तरोत्तरं द्विगुणा अङ्का स्थाप्याः। ततः प्रथमाङ्केन द्व्यङ्कयोजनं कृत्वा द्वितीयाङ्कादधः तं स्थापयेत्। प्रथमाङ्केन तृतीयाङ्कस्य योजनं कृत्वा पूर्वस्थापिताङ्कादधश्च स्थापयेत्। पुनः प्रथमाङ्केन चतुर्थाङ्कस्य मेलनं जातमङ्कं तदधः स्थापयेत्। एवमन्तिमकोष्ठाङ्कात् पूर्वकोष्ठाङ्कं यावत् कुर्यात्, अन्तिमेन प्रथमाङ्को न योज्यः, तावत्सङ्ख्याकस्य तस्य वृत्तस्याभावात्। ततः द्वितीयाङ्केन तृतीयाङ्कयोगजातमङ्कं तृतीयकोष्ठाङ्कादधः द्वितीयाङ्केन चतुर्थाङ्क-योगजातमङ्कं तदधश्च स्थापयेत्। पुनः द्वितीयकोष्ठाङ्कादधःस्थितेनाङ्केन तृतीय-कोष्ठाङ्कस्य योगे समुत्पन्नमङ्कं तृतीयकोष्ठाङ्कानामधः स्थापयेत्। ततः तृतीय-कोष्ठस्थ चतुरङ्कं चतुर्थकोष्ठस्थेन अष्टमाङ्केन संयोज्य अष्टमाङ्काधः लिखेत्। पुनः चतुरङ्काधःस्थितेन षडङ्केन अष्टमाङ्कं संयोज्य तदधो लिखेत्। ततश्च द्वितीयकोष्ठाधः तृतीयपङ्क्तिस्थाङ्केन द्वितीयपङ्क्तिस्थतृतीयकोष्ठाङ्कस्य योगेन जातम् अङ्कं तदधः स्थापयेत्, एवं क्रमेण समाप्तिं यावत् अङ्कानां स्थापनं विदध्यात्, एवं क्रियमाणे यत्र प्रस्तारसङ्ख्याधिकसङ्ख्या आपद्यते सा न लेख्या। एकत्र लिखिता चापरत्र न लेखनीया, किन्तु तदग्रिमसङ्ख्यायोगः तदधःसङ्ख्यायोगो वा कार्यः। एवं सर्वत्र। तथा च—प्रथमस्थाने सर्वगुरुः द्वितीयपङ्क्तिस्थेषु द्वितीयादिस्थानेषु विवक्षितसर्वगुरुमध्ये एकं न्यूनं कृत्वा तावद्गुरुकभेदस्थानानि। एवं तृतीयादि-पङ्क्तिषु एकैकगुरुन्यूनप्रस्तारस्थानानि। यथा—प्रथमं सर्वगुरुः द्वितीयपङ्क्तौ एकलघुस्थानानि तृतीयपङ्क्तौ द्विलघुस्थानानीत्यादि ज्ञातव्यम्। तत्र चतुरक्षर-प्रस्तारे पताका यथा—

| | कोष्ठ १ | कोष्ठ २ | कोष्ठ ३ | कोष्ठ ४ | अतिरिक्तकोष्ठ ५। |
|---|---|---|---|---|---|
| द्विगुणाङ्का,— | १ | २ | ४ | ८ | १६ |
| | | ३ | ६ | १२ | |
| | | ५ | १० | १४ | |
| | | ९ | ७ | १५ | |
| | | | ११ | | |
| | | | १३ | | |

अत्र प्रथमद्वितीयकोष्ठस्थयो र्द्व्येकाङ्कयो र्योगेन जात स्त्र्यङ्कादध, प्रथम तृतीयकोष्ठस्थयो श्चतुरेकाङ्कयो र्योगेन जात पञ्च त्र्यङ्कादध तथा प्रथमचतुर्थ-कोष्ठस्थयो रेकाष्टाङ्कयो र्योगे जात नव पञ्चाध स्थापयेत्। पुन र्द्वितीयकोष्ठस्थेन त्र्यङ्केन सह तृतीयकोष्ठस्थितचतुरङ्कस्य योगेन जात सप्ताङ्क स्तृतीयकोष्ठस्थ-चतुरङ्कात अध त्र्यङ्केन सह चतुर्थकोष्ठस्थाष्टाङ्कस्य योगात् दश षडङ्काध स्थापयेत, षोडशस्य अन्तिमाङ्कत्वात् तेन योगो न कार्य्य । तत द्वितीयपङ्क्तिस्थेन त्र्यङ्केन सह चतुर्योगे जात सप्त दशाङ्काध विन्यसेत। "एकत्र लिखितं प्राज्ञ पुनरन्यत्र नो लिखेत्" इति शास्त्रात् पञ्चाङ्केन चतुर्योगो नैव कर्त्तव्य । ततश्च त्र्यष्टयोगे एकादश सप्ताध लिखेत। त्रिषोडशयोगो न भवति, अन्तिमाङ्कत्वात्। पञ्चाष्टयोगे त्रयोदश एकादशाध स्थापयेत। पुनश्चतुरष्टयोगे द्वादश अष्टाध निवेशयेत्। अत् षोडशयोगो न कार्य्य । षडष्टयोगे चतुर्दश द्वादशाध । दशाष्टयोगो न कार्य्य । सप्ताष्टयोगे पञ्चदश चतुर्दशाध । तथा च सति प्रथमस्थाने सर्वगुरु द्वित्रिपञ्चनवस्थानेषु त्रिगुरव एकलघवो वा, अत् षड्दशसप्तैकादशत्रयोदशसु स्थानेषु द्विगुरव द्विलघवो वा। अष्टद्वादशचतुर्दशपञ्चदशस्थानेषु एकगुरवस्त्रिलघवो वा। षोडशस्थाने सर्वलघुरिति बोध्यम्। तथा चोक्तम्—"एको द्वावथ चत्वारस्ततो ऽष्टाविति वर्द्धनम्। पूर्वं परेण संयोज्य तदधो लिखयेत् बुध ॥ अन्तिमाङ्कावधिं नैव लङ्घयेदत्र कुत्रचित्। एकत्र लिखित प्राज्ञ पुनरन्यत्र नो लिखेत् ॥" इति।

पञ्चाक्षरपताका यथा—

| कोष्ठाङ्क,— | १। | २। | ३। | ४। | ५। | ६ अधिककोष्ठ |
|---|---|---|---|---|---|---|
| | १ | २ | ४ | ८ | १६ | ३२ |
| | | ३ | ६ | १२ | २४ | |
| | | ५ | १० | २० | २८ | |

| | | | |
|---|---|---|---|
| ९ | १८ | १४ | ३० |
| १७ | ७ | २२ | ३१ |
| | ११ | २६ | |
| | १९ | १५ | |
| | १३ | २३ | |
| | २१ | २७ | |
| | २५ | २९ | |

षडक्षरपताका यथा—

| कोष्ठाङ्क,—१। | २। | ३। | ४। | ५। | ६। | ७ अतिरिक्तकोष्ठ |
|---|---|---|---|---|---|---|
| १ | २ | ४ | ८ | १६ | ३२ | ६४ |
| | ३ | ६ | १२ | २४ | ४८ | |
| | ५ | १० | २० | ४० | ५६ | |
| | ९ | १८ | ३६ | २८ | ६० | |
| | १७ | ३४ | १४ | ४४ | ६२ | |
| | ३३ | ७ | २२ | ५२ | ६३ | |
| | | ११ | ३८ | ३० | | |
| | | १९ | २६ | ४६ | | |
| | | ३५ | ४२ | ५४ | | |
| | | १३ | ५० | ५८ | | |
| | | २१ | १५ | ३१ | | |
| | | ३७ | २३ | ४७ | | |
| | | २५ | ३९ | ५५ | | |
| | | ४१ | २७ | ५९ | | |
| | | ४९ | ४३ | ६१ | | |
| | | | ५१ | | | |
| | | | २९ | | | |
| | | | ५३ | | | |
| | | | ४५ | | | |
| | | | ५७ | | | |

उद्दिष्टसङ्ख्या एकद्वित्रिपञ्चाष्टत्रयोदशाद्या अङ्का' क्रमेण स्थाप्या, ततो वामावर्त्तेन सर्वान्तिमनङ्क तत्पूर्वाङ्केन लोपयेत। एकेनाङ्केन अग्रिमाङ्कलोपने एकगुरु, अन्तिमलोपे द्विगुरु, त्रिभिरन्तिमाङ्कलोपे त्रिगुरुरित्यादिरूपमायाति। यथा—षट्कलप्रस्तारे एकद्वित्रिपञ्चाष्टत्रयोदशाङ्का स्थाप्या, तत सर्वापेक्षया परवर्त्तिनि त्रयोदशाङ्कावयवे तत्पूर्ववर्त्तिना अष्टाङ्केन लुप्ते अवशिष्टा पञ्च, तस्य पञ्चाङ्कस्य तत्पूर्वत्र विद्यमानत्वात अष्टमाङ्कलोपात परकलया गुरुभावाच्च पञ्चमाङ्कात पङ्क्तिक्रमो विधेय। तथा च पञ्चमस्थाने (- - - - ᴗ) एवं स्वरूपम् एकगुरुर्विद्यते इति ज्ञान पताकाफलम्। तथा चोक्त प्राकृतपिङ्गले—"उद्दिट्ठे सिरअङ्का थप्पहु वामावत्ते परलइ लुप्पहु। एक्कलोप एक्कगुरु आण दुइतिणिलोपे दुइतिणि जाण॥ मत्तपताका पिंगल गाव जो पावइ सो परिहि कुआव॥" इति। संस्कृत यथा—"उद्दिष्टसङ्ख्याङ्का स्थाप्या वामावर्त्तेन पर गृहीत्वा लोपयेत्। एकलोपे एकगुरुमानय द्वित्रिलोपे द्वित्रान् जानीहि॥ मात्रापताका पिङ्गलो गायति य प्राप्नोति स पर शोभयति॥" इति।

अथ वर्णमर्कटिका।

एकाक्षरादिषड्‌ग्रन्थक्षरावधिवर्णप्रस्तारेषु कति वृत्तादयो भवन्ति इति प्रश्ने कृते वर्णमर्कटिकया प्रत्युत्तर देयम्। तस्याश्च साधनप्रकार प्रदर्श्यते—तत्र षट्पङ्क्तिकमेकाक्षरादिषड्‌ग्रन्थक्षरसङ्ख्यया कोष्ठक विधाय प्रथमाया वृत्तपङ्क्तौ एकादिकान् षड्‌ग्रतिपद्यन्तानङ्कान् स्थापयेत। एवञ्च प्रथमा वृत्तपङ्क्ति सिध्यति। ततो द्वितीयाया प्रभेदपङ्क्तौ पूर्वस्थापिताङ्कानध उत्तरोत्तरद्विगुणान् द्व्यादिकान् अङ्कान् विन्यसेत। एव कृते द्वितीया प्रभेदपङ्क्ति सिध्यति। तत क्रमप्राप्तामपि तृतीया मात्रापङ्क्ति मुक्त्वा तन्मूलभूता चतुर्थी वर्णपङ्क्ति दर्शयति। द्वितीयपङ्क्तौ द्विचतुरष्टादिक्रमेण स्थितानङ्कान् प्रथमपङ्क्तिस्थितै एकद्वित्रिप्रभृतिभिरङ्कैर्गुणयित्वा क्रमेण चतुर्थ्यां पङ्क्तौ द्व्यष्टचतुर्विंशत्यादिक्रमेण स्थापयेत्। एव चतुर्थ्यां वर्णपङ्क्तौ लिखिताया पञ्चम्या षष्ठ्याश्च गुरुलघुपङ्क्त्यो चतुर्थपङ्क्तिस्थिताङ्कान् एकचतुर्द्वादशादिकान् स्थापयेत। एव गुरुलघुरूपे पञ्चमषष्ठपङ्क्ती सिध्यत। तत पञ्चमपङ्क्तिस्थितान् एकचतुर्द्वादशादिकानङ्कान् चतुर्थपङ्क्तिस्थितान् द्व्यष्टचतुर्विंशत्यादिकानङ्कांश्चैकीकृत्य त्रिद्वादशषट्त्रिंशादिरूपान् तृतीयाया मात्रापङ्क्तौ स्थापयेत। एवं कृते अवशिष्टा तृतीया मात्रापङ्क्ति सिध्यति। एतेन तावत एतत बोद्धव्य—प्रथमपङ्क्ति प्रथमकोष्ठे एकाङ्कस्य विद्यमानत्वेन एकाक्षरवृत्तमिति। तदध द्वितीयपङ्क्तिप्रथमकोष्ठे द्वाङ्कस्य स्थिततया तस्य द्वौ भेदौ इति। तृतीयपङ्क्तौ प्रथमकोष्ठे त्र्यङ्कस्य

स्थितत्वेन तस्य च मात्रा तिस्र (⏑ –) एकगुरोर्द्विमात्रत्वात् एकलघोश्च एकमात्रत्वादित्यभिप्रायः । तथा चतुर्थ्यां पङ्क्तौ प्रथमकोष्ठे द्व्यङ्कस्थिते तत्र द्वौ वर्णौ इति लाभः । पञ्चमपङ्क्तौ प्रथमकोष्ठे एकाङ्कस्थिते तत्र एकलघुः, तथा षष्ठपङ्क्तौ प्रथमकोष्ठे एकाङ्कस्य स्थित्या तत्र एकगुरुरिति सिद्धिः । ततश्च एकाक्षरप्रस्तारवशात् एकाक्षरवृत्तस्य द्वौ भेदौ १। (⏑) २। (–), तेन मात्रा-त्रयम्, एकः गुरुः एकः लघुरत्येव द्वौ वर्णौ च इति ज्ञातव्यम् । एवं द्वितीयादिकोष्ठेषु द्व्यक्षरादीनां क्रमेण सङ्ख्या भेद मात्रा वर्ण-गुरु लघूपदेशः षट्सु पङ्क्तिषु कोष्ठाङ्कैर्वेदितव्यम् । सुखबोधाय आंशिकं कोष्ठप्रदर्शनमप्यत्र क्रियते । यथा—

| वृत्तपङ्क्ति | | १ | २ | ३ | ४ | ५ | ६ |
|---|---|---|---|---|---|---|---|
| प्रभेद | ,, | २ | ४ | ८ | १६ | ३२ | ६४ |
| मात्रा | ,, | ३ | १२ | ३६ | ९६ | २४० | ५७६ |
| वर्ण | ,, | २ | ८ | २४ | ६४ | १६० | ३८४ |
| गुरु | ,, | १ | ४ | १२ | ३२ | ८० | १९२ |
| लघु | ,, | १ | ४ | १२ | ३२ | ८० | १९२ |

अनया रीत्या षड्विंशत्यक्षरपर्यन्तं कोष्ठं कल्पनीयं । तथा चोक्तं—"पिङ्गला-दिभिराचार्यैर्यदुक्ता वर्णमर्कटीम् । एकाक्षरादिषड्विंशत्यक्षरावधिलक्षिताम् ॥ ग्रन्थैरनतिविस्तीर्णैः प्राकृतैरवहट्टकैः । वक्ष्ये लक्ष्यसमायुक्तां पञ्चमे प्रत्यये स्थिताम् ॥ छप्पती पत्थार करिज्जसु अक्खरसङ्खे कोट्ठ धरिज्जसु । पहिली पंति वण्ण धरिलिज्जसु दीसरि पंति दुउण परिदिज्जसु ॥ उप्परअङ्कगुणित करिलेहि चौठी पंति सोइ लिहि देहि । चौठी अङ्का पञ्चमी पंति सोइ छठमा लिहु थिक्कसति ॥ पंचमी चौठी तिसहि मिलाउ पिंगल जंपै अक फलाउ । चित्त पभेअ मत्त अरु वण्णह गुरु लहु जाणिअ एम सपसह ॥ अक्खरसङ्खहि जाणहु जीइ जिहिं जाणे मणमाणद होइ । जो बुज्झइ सोई पइज्झइ मक्कडिजाले हत्थिअ रुज्झइ ॥ लच्छीणाहेण कहे एम मक्कडिआए पवधम्मे । पेक्खह वण्णकुड मक्कडिअबुह अणारुडम् ॥" इति । संस्कृतं यथा—"षट्पङ्क्त्या प्रस्तारं कुरु अक्षरसङ्ख्यया कोष्ठकं धारय । प्रथमायां पङ्क्तौ वर्णान् धारय गृहाण द्वितीयायां पङ्क्तौ द्विगुणान् परिदेहि ॥ उपर्यङ्कैः गुणयित्वा गृहाण चतुर्थ्यां पङ्क्तौ तानेव लिखित्वा देहि । चतुर्थाङ्कान् पञ्चम्यां पङ्क्तौ तानेव षष्ठ्यां लिख निर्भ्रमम् ॥ पञ्चमीं चतुर्थीं तृतीयायां मेलय पिङ्गलो जल्पति अङ्क

सिध्यति । वृत्तानि प्रभेदान् मात्राश्च वर्णान् गुरून् लघून् जानीहि तेन सम्पन्नान् ॥ अक्षरमर्कटीं जानीत लोका । यस्या ज्ञातायां मनस आनन्दो भवति । यो बुध्यत स एव प्रतिबुध्यते मर्कटीजाले हस्ती बध्यते ॥ लक्ष्मीनाथेन कथिते अत्र मर्कटिकाया प्रबन्धे । पश्यत वर्णं—॥ श्रीलक्ष्मीनाथभट्टेन नारायणतनूभुवा । वर्णमर्कटिका प्रोक्ता पञ्चमे प्रत्यये स्थिता ॥" इति ।

शिक्षार्थिना भूयोज्ञानाय पूर्वप्रदर्शितस्य खण्डमात्रामेरुरिति सञ्ज्ञान्तरस्य मात्रामेरो भिन्नविधा प्रस्तारविन्यासप्रणाली प्रदर्श्यते—

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| | | | | | | | १ | १ |
| | | | | | | १ | १ | २ |
| | | | | | | २ | १ | ३ |
| | | | | | १ | ३ | १ | ५ |
| | | | | | ३ | ४ | १ | ८ |
| | | | | १ | ६ | ५ | १ | १२ |
| | | | | ४ | १० | ६ | १ | २१ |
| | | | १ | १० | १५ | ७ | १ | ३४ |
| | | | ५ | २० | २१ | ८ | १ | ५५ |
| | | १ | १५ | ३५ | २८ | ९ | १ | ८९ |
| | | ६ | ३५ | ५६ | ३६ | १० | १ | १४४ |
| | १ | २१ | ७० | ८४ | ४५ | ११ | १ | २३३ |
| | ७ | ५६ | १२६ | १२० | ५५ | १२ | १ | ३७७ |
| १ | २८ | १२६ | २१० | १६५ | ६६ | १३ | १ | ६१० |
| ८ | ८४ | २५२ | ३३० | २२० | ७८ | १४ | १ | ९८७ |

मात्रावृत्तेषु कत्येकगुरव कति द्विगुरव इत्यादि ज्ञानार्थं खण्डमात्रामेरु कार्य । तत्प्रकारो यथा—उपरि एकं कोष्ठं लेख्यं, तदधस्तात दक्षिणे वामे वा अतिक्रान्तैककोष्ठं कोष्ठद्वयवत पङ्क्तिद्वय, तस्याधस्तात् तद्वदेव कोष्ठत्रयवत् पङ्क्तिद्वय तदधोऽपि तथैव कोष्ठचतुष्टयवत पङ्क्तिद्वयम् इत्येवरूपेण यावदिच्छं लिखेत् । एवं कोष्ठेषु लिखितेषु वामभागे अन्त्यकोष्ठेषु एकादि-एकादि एक-चतुरादिक्रमेण एकान्तरेण एकोत्तरवृद्ध्या अङ्का विन्यस्या । दक्षिणभागे अन्त्य-कोष्ठेषु सर्वत्र एकाङ्का लेख्या । मध्ये कोष्ठे स्वोपरिस्थकोष्ठाङ्केन तदुपरिस्थ-कोष्ठपुरःस्थितकोष्ठाङ्कं संयोज्य पूर्ववत् विन्यसेत् । यथा—प्रथमपङ्क्तौ एक-

कलस्य, द्वितीयपङ्क्तौ द्विकलस्य, तृतीयपङ्क्तौ त्रिकलस्य इत्येवक्रमेण न्यासः कार्य्यः, सर्वगुर्वेकगुर्वादिकथनञ्च पूर्ववदेव कर्त्तव्यम्। प्रस्तारसङ्ख्याज्ञानार्थं प्रतिपङ्क्ति तत्तत्पङ्क्तिस्थितानां सर्वेषामङ्कानामेकीकरणेन जातमङ्कं दक्षिणभागस्थैकाङ्कात् परतो लिखेत्। तथा च—"आदावेकं न्यसेत् कोष्ठं तदधः पङ्क्तियुग्मके। द्वौ द्वौ च तदधस्त्रींस्त्रीनेवरूपेण वर्द्धनम्॥ अन्तकोष्ठेषु सर्वेषु प्रथमाङ्कं न्यसेत् सुधीः। आदौ चैकं ततो द्वौ च पुनश्चैकं ततस्त्रयम्॥ एकान्तरस्थ ऊर्द्ध्वाङ्कमेवंरूपेण पूरणम्। मध्यकोष्ठं तत प्रान्ते पूरणीयं शिरःस्थिते॥ शिरःस्थितोर्द्ध्वकाग्राङ्कमेकीकृत्य प्रपूरयेत्। एवक्रमेण सिद्धं स्यान्मात्रामेरुर्न संशयः॥" इति।

## मात्रामर्कटिका।

अथ प्राकृतपिङ्गले श्रीलक्ष्मीनाथभट्टोक्ता मात्रामर्कटी प्रदर्श्यते—"जा पिंगलेण कइणा ण णिबद्धा अप्प गंथम्मि। तं मत्तामक्कडिअं लच्छीणाहेण विरइअं भणइ॥ मत्तासंखे कोट्ठ करु बतिच्छव पत्थारि। तत्थ दुआदिकअंका धरि पंमहि प्रति विचारि॥ आइ अंक परितज्जि करु सव्वहु पतिअभारि। पुव्वजुअलसरि अंक धरु बीजी पति विचारि॥ पढमपतिठिअअंककरि बीजी पति गुणेहि। जो जो अंका अहँ परहि तं तिअ पति भणेहि॥ पढमे बीअ अंक बीए कोट्ठे अ पचम अंकम्। देऊण बाणहिट्ठा तहिट्ठा तीअचोत्थए देहु॥ काऊण एक्कभाव पचमपतिट्ठिए अंके। देऊण एक्कमकं कुणेहि तणव्वं पचम पुसम्॥ तज्जिअ पचममकं पुव्वसिं एक्कभावमावसे। देऊण एक्कमधिकं छट्ठ कुणेहि परिपुसम्॥ काऊण एक्कभावं पचमपति इआण अंकाण। तज्जिअ पचदहकं एक्कं देऊण कुणसु सुण्णिकोट्ठम्॥ एव्वं णिरवहिमत्तापत्थारे अकरिंछोलो। होइ त्ति तेण कइणा ण कओ अंकाण वित्थारो॥ एव्वं पचमपतिं पुसं काऊण पढममेककम्। देऊण बाणपतिट्ठिएहि छट्ठिं कुणेहि अंकेहि॥ काऊण एक्कभावं पचमछट्ठिट्ठिए अंकम्। पढकोट्ठ सुकइवरो चोत्थि पति च कुणउ परिपुसम्॥ विसं भेआ मत्ता वण्णा लहुआ तथा गुरुआ। एदे छप्पतिकआ पत्थारा होति वित्थारा॥ जत्थ अ हत्थि अ ठज्झइ वज्झइ चित्त अ सुत्तसारिच्छम्। तं मत्तामक्कडिअं दट्ठूण अ को ण वज्झए सुकई॥ णट्ठोद्दिट्ठं जइ वा मेरुजुअलं जहा पडाआ वा। मक्कडिआ वि तहच्चिअ कोदूहलमेत्तकारिणी भणिआ॥ इअ लच्छिणाहकइणा रइए कइरे पबन्धम्मि। पच्चअपच्चअवध पेक्खह छंदस्स सव्वस्सम्॥" इति। संस्कृत यथा—"या पिङ्गलेन कविना न निबद्धा आत्मनो ग्रन्थे। ता मात्रामर्कटिका

लक्ष्मीनाथेन विरचिता भणत॥ मात्रासङ्ख्यया कोष्ठं कुरु पङ्क्तिषट्कं प्रस्तारयित्वा। तत्र द्व्यादिकानङ्कान् धारय प्रथमपङ्क्तौ विचारयित्वा॥ आद्याङ्कं परित्यज्य सर्वपङ्क्तिमध्ये। पूर्वयुगलसदृशाङ्कान् धारय द्वितीयपङ्क्तौ विचारयित्वा॥ प्रथमपङ्क्तिस्थिताङ्कैर्द्वितीयपङ्क्तिं गुणय। यो योऽङ्को यत्र पतति तं तत्रैव तृतीयपङ्क्तौ भण॥ प्रथमे द्वितीयमङ्कं द्वितीयकोष्ठे च पञ्चममङ्कम्। दत्त्वा बाणद्विगुणं तद्द्विगुणं तृतीयचतुर्थयोर्देहि॥ कृत्वा एकभावं पञ्चमपङ्क्तिस्थितानङ्कान्। दत्त्वा एकरूपं कुरु तेनैव पञ्चमं पूर्णम्॥ त्यक्त्वा पञ्चममङ्कं पूर्वस्मिन् एकभावमापन्ने। दत्त्वा एकमधिकं षष्ठं कुरु परिपूर्णम्॥ कृत्वैकभावं पञ्चमपङ्क्तिस्थितानङ्कान्। त्यक्त्वा पञ्चदशाङ्कमेकं छित्वा कुरुष्व मुनिकोष्ठम्॥ एवं निरवधिमात्राप्रस्तारे अङ्कपरम्परा। भवतीति तेन कविना न कृतोऽङ्कानां विस्तारः॥ एवं पञ्चमपङ्क्तिं पूर्णां कृत्वा प्रथममेकाङ्कम्। दत्त्वा बाणपङ्क्तिस्थिते षष्ठीं कुरु षष्ठे॥ कृत्वा एकभावं पञ्चमषष्ठस्थितानङ्कान्। प्रतिकोष्ठं सुकविवर चतुर्थीं पङ्क्तिं च कुरु परिपूर्णाम्॥ वृत्तभेदो मात्रा वर्णा लघुकास्तथा गुरुकाः। एते षट्पङ्क्तिकृताः प्रस्तारा भवन्ति विस्ताराः॥ यत्र च दृश्यते बध्यते चित्तं च सूत्रसदृशम्। तां मात्रामर्कटि〃 दृष्ट्वा च को न बध्यते सुकविः॥ नष्टोद्दिष्टं यथा वा मेरुयुगलं यथा पताका वा। मर्कटिकाऽपि तथैव कुतूहलभावकारिणी भणिता॥ इति लक्ष्मीनाथकविना रचिते रुचिरे प्रबन्धेऽस्मिन्। प्रत्ययपञ्चकबन्धं पश्यत छन्दःसर्वस्वम्॥" इति। अथ तत्रैकमात्रादिनिरवधिकमात्राप्रस्तारेषु कतिकतिजातिसम्बन्धिवृत्तादयो भवन्तीति प्रश्ने कृते मात्रामर्कटिकया प्रत्युत्तरं देयमिति तद्विरचनप्रकारो लिख्यते। तत्र प्रथमपङ्क्तिसाधनोपायमाह—स्वाभिमतमात्रासङ्ख्यया पङ्क्तिषट्कं यथा स्यात्तथा कोष्ठकं कुरु ततः प्रथमायां वृत्तपङ्क्तौ यावदिच्छं क्रमेण द्व्यादिकानङ्कान् स्थापय। सर्वासां पङ्क्तीनां मध्ये प्रथमाङ्कं परित्यज। अत्रैवं च प्रतिभाति, सर्वकोष्ठेषु प्रथमाङ्कत्यागो न सर्वकोष्ठत्यागपरः, किन्तु षष्ठगुरुपङ्क्तिप्रथमकोष्ठत्यागपरः, तत्र गुरोरभावात्। अतश्च सम्प्रदायात् पञ्चसु कोष्ठेषु प्रथमाङ्कविन्यासः अवश्यं कर्त्तव्य एव, अन्यथा वक्ष्यमाणाङ्कविन्यासभङ्गापत्तेः। एवं कृते प्रथमा वृत्तपङ्क्तिः सिध्यति। अथ द्वितीयां प्रभेदपङ्क्तिं साधयति—एकद्वित्रिपञ्चाष्टादीन् पूर्वाङ्कद्वययोगेन क्रमशो धारय, एवञ्च द्वितीयप्रभेदपङ्क्तिः सिध्यति। अथ तृतीयां मात्रापङ्क्तिं साधयति—प्रथमपङ्क्तिस्थिताङ्कैः द्वितीयपङ्क्तिस्थानामङ्कानां गुणने यो योऽङ्को यत्र पतति तं तं तृतीयपङ्क्तौ धारय, एवं तृतीया मात्रापङ्क्तिः।

सिध्यति। अथ क्रमप्राप्तां चतुर्थीं वर्णपङ्क्तिमुल्लङ्घ्य युगपदेव चतुर्थषष्ठपङ्क्त्योः साधनार्थं तन्मूलभूतां पञ्चमीं लघुपङ्क्तिं साधयति तत्र प्रथमे द्वितीयमङ्कं, षट्स्वपि पङ्क्तिषु प्रथमकोष्ठत्यागात् द्वितीयकोष्ठमेवात्र प्रथमं कोष्ठम्, अत अस्मिन्नेव द्वितीयमङ्कं, तदपेक्षया द्वितीयकोष्ठे च पञ्चमाङ्कं दत्त्वा ततो वामद्विगुणं दश तद्द्विगुणं विंशतिश्च इत्येतौ द्वावङ्कौ तृतीयचतुर्थकोष्ठयो विन्यसनीयौ। तत पञ्चम-पङ्क्तौ स्थितान् द्व्यादीनङ्कानेकीकृत्य तस्मिन् एकमधिकं दत्त्वा ततश्च निष्पन्नेन अष्ट-त्रिंशता पूर्वापेक्षया पञ्चमं कोष्ठं पूर्णं कुरु। तत पूर्वस्मिन् द्व्यादिके पञ्चमपङ्क्ति स्थिताङ्के एकीकृते सति तत पञ्चममङ्कं त्यक्त्वा पुनस्तत्रैकमधिकं दत्त्वा पूर्ववत् जातेन एकसप्तत्या षष्ठं कोष्ठं पूरय। तत पञ्चमपङ्क्तिस्थितान् द्व्यादीनेकीकृत्य तस्मात् पञ्चदशाङ्कं त्यक्त्वा तेष्वपि एकं परित्यज्य सप्तमकोष्ठं त्रिंशदुत्तरेण शतेन पूर्णं कुरु। अथ पञ्चमपङ्क्तौ द्व्यादिकान् सप्तमकोष्ठावधिस्थितानङ्कानेकीकृत्य तेषु एकं चत्वारिंशदङ्कं त्यक्त्वा जातेन पञ्चत्रिंशदधिकशतद्वयेन अष्टमं कोष्ठं पूरय। अथ द्व्यादिकान् अष्टमकोष्ठावधिस्थितान् अङ्कानेकीकृत्य तेषु एकनवत्यङ्कं विहाय निष्पन्नेन विंशत्यधिकचतुःशताङ्केन नवमं कोष्ठं पूरय। तत द्व्यादिकान् नवमकोष्ठावधिस्थितानङ्कानेकीकृत्य तत सप्ताशीत्यधिकशताङ्कं वियुज्य अवशिष्टेन चतुश्चत्वारिंशदधिकसप्तशताङ्केन दशमकोष्ठपूरणं कुरु। एवञ्च चतुर्थषष्ठपङ्क्तिगर्भा पञ्चमी लघुपङ्क्तिः सिध्यति। अथ षष्ठगुरुपङ्क्तिसाधनप्रकारो यथा—तत्र गुरुस्थानीयं प्रथमकोष्ठकं विहाय अग्रिमकोष्ठे प्रथममेकाङ्कं दत्त्वा पञ्चमपङ्क्तिस्थितैर्द्व्यादिभिरङ्कैः षष्ठीं पङ्क्तिं पूरय। एवं षष्ठी गुरुपङ्क्तिः सिध्यति। अथ अवशिष्टचतुर्थवर्णपङ्क्तिपूरणप्रकारो यथा—पञ्चमषष्ठपङ्क्तिस्थितान् द्व्यादीनङ्कानेकीकृत्य प्रतिकोष्ठं चतुर्थीं पङ्क्तिं पूरय। अत्र षष्ठपङ्क्तौ आदिकोष्ठे अङ्काभावात् चतुर्थपङ्क्तिप्रथमकोष्ठे एकाङ्क एव देय, एवं कृते चतुर्थी वर्णपङ्क्तिः सिध्यतीति। अङ्कावन्यासप्रणाली यथा—

| वृत्तपङ्क्ति | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ |
|---|---|---|---|---|---|---|---|---|---|---|---|
| प्रभेद „ | १ | २ | ३ | ५ | ८ | १३ | २१ | ३४ | ५५ | ८९ | १४४ |
| मात्रा „ | १ | ४ | ९ | २० | ४० | ७८ | १४७ | २७२ | ४९५ | ८९० | १५८४ |
| वर्ण „ | १ | ३ | ७ | १५ | ३० | ५८ | १०९ | २०१ | ३६५ | ६५५ | ११६४ |
| लघु „ | १ | २ | ५ | १० | २० | ३८ | ७१ | १३० | २३५ | ४२० | ७४४ |
| गुरु „ | | १ | २ | ५ | १० | २० | ३८ | ७१ | १३० | २३५ | ४२० |

इति श्रीमज्जीवानन्दविद्यासागरकृतायां पिङ्गलच्छन्दःसूत्रे हलायुधकृती सुखबोधिन्याम् अष्टमोऽध्यायः।

## परिशिष्टम्।

अथ मात्राप्रस्तारे प्राकृतपिङ्गलाद्युक्ता षट्कलादीनां गणव्यवस्था अत्र प्रदर्श्यंते यथा—

### ऋतुमात्रष्ट ॥१॥

अस्य त्रयोदश भेदा, यथा—⏑⏑⏑ हर (१) --⏑⏑ शशी (२) -⏑-⏑ सूर्य (३) ⏑--⏑ शक्र (४) ---⏑ शेष (५) -⏑⏑- अहि (६) ⏑-⏑- कमल (७) ---⏑- धाता (८) ⏑⏑-- कलि (९) --⏑-- चन्द्र (१०) -⏑--- ध्रुव (११) ⏑---- धर्म (१२) -- ---- शाली (१३)।

### पञ्चमात्रष्ठ ॥२॥

अस्याष्टौ भेदा, -⏑⏑ इन्द्रासनम् (१) ⏑-⏑ सूर्य (२) -- ⏑ चाप (३) ⏑⏑- हीर (४) --⏑- शेखर (५) -⏑- कुसुमम (६) ⏑--- अहिगण (७) ----- पापगण (८)।

### चतुर्मात्रो ड ॥३॥

अस्य पञ्च भेदा, ⏑⏑ कर्ण (१) --⏑ करतल (२) -⏑- पयोधर (३) ⏑-- वसुचरण (४) - -- विप्र (५)।

### त्रिमात्रो ढ ॥४॥

अस्य भेदास्त्रय, -⏑ रसवास (१ ⏑- पवन (२) --- वलयम् (३)।

### द्विमात्रो णः ॥५॥

अस्य भेदौ द्वौ, यथा—⏑ हार (१) -- सुप्रिय (२)।

अथ प्राकृतपिङ्गलाद्युक्ता आर्य्यादीनां गणच्छन्दसां वैतालीयादीनां मात्राच्छन्दसाञ्च कतिचित् सोदाहरणभेदा प्रदर्श्यन्ते, यथा—

### आर्य्याभेदान्तर्गता उद्गीतिर्विगाथा ॥६॥

उदा०—तरणितनूजातीरे चीरेऽपहृतेऽपि चौरेण। हिमनीरे रमणीनामकुटिल-धीरेव मनसि सज्जते (१)॥

### उपगीतिर्गाहु ॥७॥

### गीतिरुद्गाथा ॥८॥

यत्र द्वादशाष्टादशमात्र प्रथमार्द्धं द्वादशविंशति-
मात्रं द्वितीयार्द्धं सा गाहिनी ॥९॥

उदा०—स जयति मुरलीवादन (१) केलिकलाभिर्विनोदयन् गोपी । (२)
इन्देऽम्लानभूमौ (३) रासरसाश्रितविबुधाबधिरुद्रमुख ॥ (४)

विपरीता सिंहिनी ॥१०॥

उदा०—वन्देऽरविन्दनयन (१) वृन्दारकवृन्दवन्दितपदाम्भोजम् । (२) नन्दानन्द-
निदान (३) नवजलधरवर्चिरमिन्दिरारमणम ॥ (४)

द्वादशविंशतिमात्राभिः स्कन्धकार्द्धम् ॥११॥

उत्तरार्द्धमपि तथा। उदा०—राधामुखाब्जतरणि (१) तरणि संसारसागरो
त्तरणविधौ। (२) स जयति निजभक्तानां (३) कामितदाता दरन्नशक्तिवकाय ॥ (४)
अस्या भेदा अष्टाविंशतिसङ्ख्यका प्राकृतपैङ्गले द्रष्टव्या। इति गाथाप्रकरणम्।

ट-ड-ढाष्ट-ड-लौ दोहार्द्धम् ॥१२॥

उत्तरार्द्धमपि तथा। उदा०—गौरीविर ( ट ) चिततनु ( ड ) सकल ( ढ )
मसकरा ( ट ) जितग ( ड ) ङ्ग ( ल )। (१) जय वृषभ ( ट ) ध्वज पुर (ड)
मथन ( ढ ) महादेव ( ट ) शिव ( ड ) ङ्ग ( ल ) ॥ (२) लघुगुरुसन्निवेश-
विशेषादस्यास्त्रयोविंशतिभेदा प्राकृतपैङ्गलेऽनुसन्धेया।

रुद्रमात्राभिः षट्पदी रसिका ॥१३॥

उदा०—जय जय हर वृषगमन (१) तरणिदहनविधुनयन (२) नयनदहनजित-
मदन। (३) निजशरहतपुरकदन (४) मम हृदयगतमपनय (५) मविनयमधिकमप-
नय ॥ (६) अत्रापि लघुद्वयस्यैकगुरुकरणात् अष्टौ भेदा स्तु ।

एकादशत्रयोदशयतिकचतुर्विंशतिमात्रा चतुश्चरणा
चतुष्पदी रोला ॥१४॥

उदा०—अरिगणमभितापयति विबुधलोकानुपगच्छति (१) धरणीविवरगं-
भुजगनिकरमभितापिनच्छति। (२) सकलदिगीशपुरमभि निजतापैरभियोजयति (३)
भूप। कथ प्रतापस्तव कीर्त्तिं न शोषयति ॥ (४) अस्य भेदास्त्रयोदश।

शर्मकितसप्तदशाक्षराष्टादशाक्षरपादाभ्यां गन्धानार्द्धम् ॥१५॥

उत्तरार्द्धमपि तथा। उदा०—गर्जति जलधर परिनृत्यति शिखिनिवह (१)

नीपवनीमवधूय वहति दक्षिणगन्धवहः । (२) दूरे दयित सखि । किमिह हि करवै (३) प्रज्वालय दहन झटिति शलभमनुकरवै ॥ (४)

## सगौ समडकारैश्चतुष्पदो ॥१८॥ चौपैया ।

उदा०—चेत ! स्मर मद्दि त काम लामहि त दा रितदा कणार्कं मं (१) हतचे नक्का दा नवमि च्छामा नवमृषि जनमा नमह मम । (२) यमुना वरनी-रे तर लमनी रे का-रितगो पीरा-सं (३) भववा ध्याहर णा रा धारम णा क न्दकुसुम-ममहा सम ॥ (४)

## सम्पूर्णैश्चतुष्पद्यन्या चतुष्पदी ॥१९॥

पूर्वोक्तचतुष्पद्यैर्यस्या एक पाद सम्पद्यते तादृशपादैश्चतुष्पदी द्वितीया चतुष्पदी स्यात् । उदा०—व्रज गो कुलपा ल ला-लितवा ल वा ढितमदु रवर्द्ध श, रोचन-युतभा लं धृत वनमा लं श्री भितनर लवत श दितिज व्रजकी ल वा ढितता ल कृत-सुरमुनि गणाश म, रुचिरक लितमा-लं शित घनजा-ल भा-सितया दवव शम । (२) सुरमी-रुहनय न अग तामय मं का ग्रहतम ध्यितहा रं धृतगो पसुवे श कु ञ्चितके श खित जितनव-घनसा रं जितनय नचको र न न्दकिशो र गो पीमा नसचौ र, कृतरा धाधा रं स-ञ्जनता र दिति सुतना-शकठो-र (३) नवकलि तकन्द-र्प जग दवल-र्प से वितयमु नातो र, वन्दित सुरवृ न्द जग दान न्दं गो पीजन इतचौ र, धृतधर-णीवल-य करु-णानिल यं द लविनि जितही र, भवसा गरपा रं भुव नागा र न न्दसुत शठवो रम ॥ (४) प्रथमया सह मेलनाद्दिय चतुष्पदी सम्पूर्णा ।

## समडकारान्ते वलयं ( - - - ) दशाष्टत्रयोदश-यतिकमित्थं द्विपदी घत्ता ॥१८॥

उदा०—भववा धाहर णा रा धारम णा न न्दकिशो रं स्मर हृदय ! । (१) यमुना याक्षो रे तर लसनी रे कृत वरदा सं लम नुधर ॥ (२)

## ट-डत्रय-ठ-डद्वयैरेकत्रिंशत्कलः एकादशसप्तत्रयोदशयतिकः इत्थ द्विपदी घत्तानन्दः ॥१९॥

उदा०—दितिसुतविर (ट) हगञ्ज (ड) ननसुख (ड) भञ्जन (ड) मनुगतज (ठ) नताप (ड) हरणम् । (ड) (१) निखिलमान (ट) सरञ्ज (ड) ननतिनि (ड) रञ्जन (ड) मस्तु किम (ठ) पि मह (ड) शरणम् ॥ (ड) (२)

## यत्र द्वौ टकारौ सज-विप्रान्यतमडत्रयमध्यौ रुद्रत्रयोदशयतिकौ इत्थं चतुष्पद काव्यम् ॥२०॥

उदा०—मूर्द्धि विरा (ट) जितच (ड) न्द्र चन्द्र (ड) कलीप (ड) लतिलकवर (ट) (१) तिलकदहन (ट) वरनय (ड) न नयन (ड) जितमद (ड) नमनोहर। (ट) अमरनिकर (ट) क्षतमन (ड) नमनन (ड) निरवधि (ड) करुणाकर (ट) (३) करधृतमनु (ट) जकला (ड) परिबुध (ड) जनतिमि (ड) रविभाकर॥ (ट)

## डत्रय-ढ-ट-ड-ढैर्वसुपञ्चमात्राकैश्चतुष्पदम् उल्लालम् ॥२१॥

## काव्यपादचतुष्टयोल्लालद्विपदै षट्पदी ॥२२॥

उदा०—जय जय न (ट) न्दकुमा (ड) र मार (ड) सुन्दर (ड) वरलोचन (ट) (१) लोचनजित (ट) नवक (ड) ञ्ज कञ्ज (ड) निभश्रय (ड) भवमोचन (ट) (२) नूतनजल (ट) धरनी (ड) लशील (ड) भूषित (ड) गतदूषण (ट) (३) दूषणहर (ट) धृतमा (ड) लमाल (ड) भूषित (ड) वरभूषण (ट) (४) दूषण (ड) गणनिह (ड) मम निखि (ड) लमपि (ढ) कुरु दूरे (ट) नन्दकि (ड) शोर (ढ) (५) तव चर (ड) णकमल युगलम (ड) नुदिन (ढ) मनुसेवे (ट) नयनच (ड) कोर॥ (ढ) (६)

## जान्तडचतुष्टयचतुष्पदी पज्झटिका ॥२३॥

उदा०—गाङ्ग (ड) वन्द्य (ड) परिजय (ड) ति वारि (ज) (१) निखिलज (ड) नमना (ड) सुदूरित (ड) निवारि। (ड) (२) भवमुक्त (ड) टविरा (ड) जि जटा (ड) विहारि (ज) (३) मज्ज (ड) ज्जनमा (ड) न सता (ड) पहारि॥ (ज) (४)

## सैव भान्ताऽडिल्ला प्रथमद्वितीययोस्तृतीय-चतुर्थयोश्च यमकिता ॥२४॥

उदा०—हरिरुप गत इह सखि मयि वेदय (१) कुञ्जगृहोदर गतमपि खेदय। (२) इह यदि सपदिस विषमुप यास्यति (३) रसरस नामृत मिदमनु यास्यति॥ (४)

## डचतुष्टयपूर्ववत् यमकितपादाकुलकम् ॥२५॥

उदा०—जलभर दानह रितवन भाग (१) शीतल मारुत क्षतपर भाग। (२) चञ्चल चपला धृतवन-माल (३) समुपा गत इह जलधर काल॥ (४)

## षोडशचतुर्दशमात्राभिश्चौयाल्लार्द्धम ॥२६॥

उत्तरार्द्धमपि तथा। उदा०—दिशि दिशि विलसति जलधरगर्जित (१) मथ ता केका राजयते। (२) सा मम चेत कुरुते तर्जित (३) मपि का कान्तो भाषयते॥ (४)

यत्र ढ-डद्वय-जकारै प्रथमः पादः, लद्वयान्त्यडत्रयेण द्वितीयः, ढ-डत्रयेण तृतीयः, ढ-डद्वयेन चतुर्थः, तृतीयवत्

पञ्चम॰ पदपञ्चकान्ते दोहापादचतुष्टयम् इत्थं नवपदी रड्डा ॥२७॥

उदा॰—पिकस (ढ) वमिदम—नुविलस—ति दिशु (ञ) (१) किंशुक—कलिका विकसति (२) वहति (ढ) मलयम—रुदयम—पि सुलघु (३) विवत (ढ) अलिरपि कलयति (४) विकस (ढ) ति मञ्जु—लमल्ल—रिरपि च। (५) इति मधुरनुवनमनुसरति (६) बहुलीभूय सुकेशि (७) हरिरपि विलसति चरणयुग (८) मनुसर त हृदयेशि। ॥ (९)

अजवसुडैश्चतुष्पदी पद्मावती ॥२८॥

उदा॰—करयुग—धृतव—शी रुचि—रवल—शी गो—वङ्गम—धारण—शील (१) प्रियगो—पविहा—री भव—सन्ता—री वृ—न्दावन—विरचित—शील। (२) धृतवर—वनमा—ली निज—जनपा—ली वर—यमुना—जलरुचि—शाली (३) मम म—ङ्गलदा—यी क्रत—भवमा—यी वर—भूषण—भूषित—माली ॥ (४)

यत्र दोहाचरणचतुष्टयेन पूर्वार्द्धं काव्यचरणचतुष्टयेनोत्तरार्द्धं दोहाशेषचरणकाव्याद्यचरणैकदेशाभ्यां काव्यद्वितीयतृतीयपादाद्ययतिभ्याञ्च यमकयुक्ता सा कुण्डलिका ॥२९॥

उदा॰—चरण शरण भवतु तव (१) मुरलीवादनशील। (२) सुरगणवन्दितचरणयुग। (३) वनभुवि विरचितलील। (४) वनभुवि विरचितलील। (५) दुष्टजनखण्डनपण्डित। (१) दुर्जनजनहृदिकील। गण्डयुगकुण्डलमण्डित। (२) दुर्जनजनहृदिकील। भीतभयतापविहरण। (३) मुनिजनमानसहंस। हरतु मम ताप चरणम् ॥ (४)

ट-डचतुष्टय-लैरर्कं-त्रयोदशयतिकैश्चतुष्पदं गगनाङ्गनम् ॥३०॥

उदा॰—मानसमिह (ट) मम क्र—न्तति को—किलविह—गमका—रण (ढ) (१) कलितशरा (टे) समसा—यकमत—नु कल—यति मा—रणम्। (ढ) (२) मधुसमये (ट) कथमपि—साख। जी—व निज—मपि धा—रये (ढ) (३) रुचिरमधुभि (ट) दुरन्त—रा क्षण—मपि सो—ढुमपा—रये (ढ) ॥ (४)

ट-डपञ्चकगैर्द्विपदी ॥३१॥

उदा॰—मम मानस (ट) मभिलष—ति सखि। क्र—शराव—केलिर—

स्नाय—के। (ग) (१) निजरुचिजित (ट) नूतन—जलधर—मुरली—नादसु—खदाय—के॥ (ग) (२)

**दश-दश-सप्तदशयतिक-मुनिवह्निमात्राकद्विपदमुल्लणम् ॥२३॥**

उदा०—करविधृतवंशरव जातहृदयचित्तभव गोकुलानन्दकररुचिरहासे। (१)
मम सविधमुपयासि मम वचनमनुपासि बल्लवीरभिभूय जनितहासे॥ (२)

**डनवक-राभ्यां द्विपदी खञ्जा ॥२४॥**

उदा०—निजतनु रुचिविजित तनवघन-लघरव चिविधृत-रुचिरत-रमुकुट हरिरिह मम हृदि भासताम्। (१) मम हृद-यमविर-तमनुभ वतु तव निजजन मुखवित रपरहि कचरण सरसिज दासताम॥ (२)

**यत्र डषट्क-जाभ्यां डसप्तक-जाभ्याञ्च**

**पूर्वोत्तरार्द्धं सा शिखा ॥२५॥**

उदा०—विकचन लिनगत मधुरम-धुकरक लरवम नुकलय सुकेशि॥ (१)
हरिरिति विनमति चरणयु-गमपि न यि कुरु हृ-दयमप-रुषमति-सुवेशि।॥ (२)

**यत्र डनवक-रेफकर्णौ ( ⏑ ⏑ ) पूर्वार्द्धम्**

**आर्य्योत्तरार्द्धञ्च सा माला ॥२६॥**

उदा०—अपितहृ-दयकर युगकृत वसनव सनहर चपरव श्रयुवति कृतविम-तिरभय-माचरता हासा। (१) तीरे कदम्बशाली वरवनमाली हरि पायात॥ (२)

**कुसुमान्त ( - ⏑ - - ) दोहापूर्वोत्तरार्द्धाभ्यां**

**चुलियाला ॥२७॥**

उदा०—चचसुपविश वनभुवि हरे। मम पुनरागमनाव ( दो ) धि पालय। (१)
उपयातामिह मम सखीं तामद्य गाथासु (दो) पपालय॥ (२)

**ट-ड-लैष्ट-ढ-भै सौरठार्द्धम् ॥२८॥**

उत्तरार्द्धमपि तथा। उदा०—रूपविनि (ट) र्जितमा—र। सकलयाद (ट) वकुल (ढ) पालक।। (१) जय जय न (ट) न्दकुमा—र। गोपीगो (ट) पजन (ढ) लालक।॥ (२)

**यत्र विप्र-स-भान्यतर-डत्रय-गैरेकादशाक्षरैः प्रथम-**

**द्वितीयपादौ स-भान्यतर-डत्रय-गैर्दशाक्षरैश्च**

**तृतीय-चतुर्थौ पादौ सा हाकलि, ॥२९॥**

उदा०—विक्रतम—यानक—वेशक—ल (१) चरणा—ङ्कितवर—भूमित—ल्लम। (२) व्योमत—लामल—कम्बुग—ल (३) नौमि वि—भूषित—भावत—लम् ॥ (४)

### ड-जाभ्या चतुष्पदो मधुभारः ॥४०॥

उदा०—उरसि क—तमाल (ज) (१) भतग—नपाल (ज)। (२) रुचिजित—तमाल (ज) (३) जय न—न्दबाल (ज) ॥ (४)

### डत्रय-ट-डत्रय-गैश्चतुष्पदो दण्डकला ॥४१॥

उदा०—स्मर के—शिनिसू—दनविनि—हतपूतन (ट) रचितदि—तिजकुल—कलकद—न (१) बाधा—वलिमा—लितस—ङ्गरपालित (ट) पार्थवि—लोकित-शुभवद—नम्। (२) कलमा—श्यामा—नव रण—हतदानव (ट) दुस्तर—भवजल—तारित—वि (३) सुरभि—सुविधा—यकया—दवनायक (ट) मधुमह—र प्रण—मामि ह—रिम् ॥ (४)

### जान्तैकादशमात्राभिश्चतुष्पद आभीर ॥४२॥

उदा०—व्रजभुवि रचितविहार (१) सुलिशतकलितविचार। (२) यदुकुल जनितनिवास (३) जय भुतलकृतरास ॥ (४)

### डचतुष्टय-ट-डद्वय-गै षोडशमात्रायतिकै-श्चतुष्पदी कामकला ॥४३॥

उदा०—कमला करला लितपद कमल निजजनहृद (ट) यविना शितशम ल (१) पीतव सनपरि भानित-मदन जितकम्बुग (ट) मोहर विमलग-लम्। (२) नाभिक मलगत-विधिकृत-नमन फणिमणिकु (ट) ण्डलम ण्डितवद-न (३) नौमि क-लधिशय मतिरुचि-मदन दानवनिव (ट) हसमर-कृतवा-नम् ॥ (४)

### अज ( - ᵕ - ) डसमक-गै रुचिरार्द्धम् ॥४४॥

उत्तरार्द्धमपि तथा। उदा०—कस्य त-नुर्मनु-जस्य सि-तासित-सङ्गम धीविधि त पति ता। (१) यस्य कृ-ते कर-भोरु। वि-सीदसि सिद्धिरा तप्रनिधि तेव ल-ता ॥ (२)

### ड-लद्वय-जैश्चतुष्पद दीपकम् ॥४५॥

उदा०—शीर्षवि रचि-तहार। (१) पिटका नन-विहार। (२) जय जय हर! महेश। (३) गौरी कृत सुवेश। ॥ (४)

### स-द्विजान्यतर-डैश्चतुर्भिश्चतुष्पद सिंहावलोकितम् ॥४६॥

उदा०—हतदु षणाशत जलनिधि तरण (१) रणभुवि शतदा नवकुल-मरणम्। (२) रेणरणि तशरो सनम झकार (३) करकलि तशिरो नम टे ववरम्॥ (४)

## गादि-ट-ठ-ड-ज-गैश्चतुष्पद प्लवङ्गमः ॥४७॥

उदा०—कुञ्चितच (ट) ञ्चलकुन्त (ठ) लकलित—वरान (ज) न (१) वेणाविरा (ट) वविनोद (ठ) विनोहि—तकान (ज) नम्। (२) मण्डलना (ट) यंकदान (ठ) वखण्ड— नपाण्डि (ज) त (३) चिन्तय चं (ट) ण्डकरोप (ठ) मकुण्ड—लमण्डि (ज) तम्॥ (४)

## डाष्टकैश्चतुष्पदी लीलावती ॥४८॥

उदा०—गुञ्जा-कृतभू-षणमखि लजनह तदूष णमधिक कृतरा सकल (१) करयुग-धृतमुर-लि नव-जलधर नील वृन्दा-वनभुवि चपलम्। (२) हतगी पीमा न ना-रदकृत-गान लीला वलदे वयुत (३) स्मर न-न्दतनू ज सुर वरकृत-पूज मम हृद य। मुनिज-नेनुतम्॥ (४)

## ठ-ट-ठत्रय-गैरष्टाविंशतिमात्रकं हरिगीतम् ॥४९॥

उदा०—रचय कद (ठ) लीदलनव (ट) शयन क (ठ) मलदला (ठ) वलि मालि (ठ) त (१) वीजय म (ठ) दुपवनेन (ट) घनाघन (ठ) सुन्दरवि (ठ) रहदालि (ठ) तम्। (२) अङ्गकम (ठ) पि घनसार (ट) विराजत (ठ) चन्दनर (ठ) चनलालि (ठ) त (३) कुरु मन व (ठ) चनमानय (ट) कमलान (ठ) नवनमा (ठ) लिनमालि। (ठ) तम्॥ (४)

## गद्वयान्तनियतन्त्वहरगीतम् ॥५०॥

उदा०—उरसि विल (ठ) सितानुपम (ट) नलिनकृत (ठं) मधुकरक (ठ) तयुतमा (ठ) ल (१) मुनिजनय (ठ) मनियमादि (ट) विनाशक (ठ) सकलदन (ठ) जकुलका (ठ) लम्। (२) मुरलीर (ठ) वमोहनम (ट) नुमोहित (ठ) निखिल-युव (ठ) तिकृतरा (ठ) स (३) विनमतु म (ठ) म हृदि किमपि (ट) गोपिका (ठ) मानसक (ठ) लितविला (ठ) सम॥ (४)

## नव-सप्त-द्वादशयतिकश्चेद्धरिगीता ॥५१॥

उदा०—भुजगपरि (ठ) वारित, हर्ष (ट) मधारित, (ठ) हस्तडेम (ठ) कविराजि (ठ) त (१) कृतमदन (ठ) गञ्जन मधु (ट) भभञ्जन, (ठ) सुरमुनिग (ठ) णसभाजि (ठ) तम्। (२) हिमकिरण (ठ) भासित-दह (ट) नभूषित, (ठ) भालसुम (ठ) या सङ्ग (ठ)

त (३) धृतकान्ति (ठ) वासव नम (ट) कमानस, (ठ) मनुवर सु (ठ) खदनङ्ग । (ठ) तम् ॥ (४)

## अजाष्टडैर्दश-वसु-वसु-ऋतुयतिकैश्चतुष्पदो त्रिभङ्गी ॥५२॥

उदा०—वरसु न्दरा र हृदि कतमा-र विर हितसा र कुच-मुषित (१) चारुश विधुवि-म्ब न कु च विल म्ब हर मिकुर म्ब काम लकृतम । (२) जहि मत्त यशपव नं लघु लघु वह-न तन कृतदह न मो-हकार (३) मम चि त्तमधी-र रद जितहो-र यदु वरवी र या ति परम् ॥ (४)

## दशाष्टचतुर्दशयतिकैर्वसुडैश्चतुष्पदी दुर्मिलका ॥५३॥

उदा०—हैय ज्ञवचौ र न न्दाकिशी र, त कुन्तकण-वाचिस्त दशन (१) घनकु ञ्चितके श म-ञ्जुलवे श विजि तमनुज-सुरवाच सदनम् । (२) चपरि-स्फुटगद न दधि युतवद न नौ मि दितिज वरञ्चक टहर (३) मुक्ता भूषा-लकम-कुतवा-लकमखि-लमुनिज नहृदि सु खकरम् ॥ (४)

## यमकितगादि-टत्रय-राभ्यां (⏑ - ⏑) प्रथमद्वितीययोस्तृतीय-चतुर्थयोश्चान्त्ययमकितश्चतुष्पदो हीर ॥५४॥

उदा०—चन्द्रवदन (ट) कुन्दरदन (ट) मन्दहसन (ट) भूषण (र) (१) भीतिकदन (ट) नीतिसदन (ट) कान्तिमदन (ट) दूषणम् । (र) (२) धीरनतुल (ट) हीरबहुल (ट) चीरहरण (ट) पण्डित (र) (३) नौमि विमल (ट) धूतकमल (ट) नेत्रयुगल (ट) मण्डितम् (र) ॥ (४)

## सप्तद्विज (- - - -) सैर्दश-वसु-वसु-ऋतुयतिकै-श्चतुष्पदं जनहरणम् ॥५५॥

उदा०—वरजल निधिजल शय निज पदरुचि चय सुर गणहृत-भय गत-कुमते । (१) बहुदिति-सुतकुल-हर निज-जनसुख कर सुर-मुनिगण वर कृत सुमते ।। (२) चनलक मलसुव सन कटि-धृतसुर सन कुसु मनिभच सन सुख-करण (३) तव भव-तु पदक मलमधि कतरवि-मलसुख दशभयु-गलभव-तरणम् ॥ (४)

## लद्वय-डनवक-गैर्दश-वसु-चतुर्दश-वसुयतिकै-श्चतुष्पदं मदनगृहम् ॥५६॥

उदा०—वर बालितक पाल धृतनर-नाल भाल-ज्वालन-हुतमद न कृत रिपु-

वाद नं (१) भव भयभर हरण गिरिजा रमण सकलज नसुर-शुभचरि त गुण गण-भरि तम। (२) कृत फणिपति हार त्रिभुवन-सार टचम-खचय-सत्तु र्थं रम णील-ष्प (३) गल-राजित-गरल गङ्गा विमल कला सावल धामक र प्रण मामि ह रम् ॥ (४)

## ट-ठपञ्चक-ग-लैर्दशवस्वैकादशयतिकैश्चतुष्पदं महाराष्ट्रम् ॥५७॥

गर्वाविलि (१) (ट) भासुर हतक-सासुर भुवि कृत विमलवि-लास (१) मरलीभा (ट) सुरकर हवभा-सुरहर वरतव णीकृत-रास। (२) दावानल (ट) वालक-गोधन-पालक हिमकर-करनिभ हास (३) कृपया कुरु (ट) हाष्ट मयि सुख-दृष्टि मुनिहृदि जनितवि कास ॥ (४)

## भसप्तक-गाभ्यां चतुष्पदी मदिरा ॥५८॥

उदा०—भालवि राजित चन्द्रक लु नय-नानल-दाहित कामव र (१) वाहु-वि राजित शेषफ-णीन्द्रफ-णामणि-भासुर-कान्तिध-रम्। (२) भूधर राजसु-तापरि-रम्भित-मण्डित-नूपुर दण्डध र (३) नौमि म-हेशम-शेषसु रेशवि लक्षण वेशमु-मेशह रम् ॥ (४)

## सैव गान्ता मालती ॥५९॥

उदा०—चन्दक चारुच-मत्कृति-चञ्चल-मौलिवि-लुम्पित-चन्द्रक-शोभ (१) वन्धन-वीनवि भूषण-भूषित-नन्दसु-त वनि-ताधर-लोभम। (२) धेनुक-दानव-दारण-दुन्दद-यानिधि-दुर्गम-वेदर-हस्य (३) नौमि ह-रि दिति-जावलि-नाशित-भूमिभ-रापह-द सुय-शस्यम् ॥ (४)

## साष्टक गाभ्यां चतुष्पदी मल्ली ॥६०॥

उदा०—गिरिरा-जसुता-कमनी-यमन-ङ्गविभ-ङ्गकर गलम-सकला-ल (१) परिधृ-तगङ्गा-जिनवा ससमु-द्धतनु-त्थकर विगच्छी-तकपा-लम्। (२) गरला-नल-भू-षितदी-नदया-लमद-भ्रमटो-द्धतटा-नवकी-ल (३) प्रणमा-मि विलो-लजटा-तट-गु-म्फितशी-घकला-निधिला-ञ्छितभा-लम ॥ (४)

## जसप्तक-लगैश्चतुष्पदी मल्लिका ॥६१॥

उदा०—धुनोति मनो म-म कम्पि-तकान-नकम्पि-तकेलि-रय प-वन (१) कथा-म-पि नैव करोमि तथापि हथा क-दन कु-रुते म-दन। (२) कलानि-धिरेष वलाद-

वि मुञ्च ति वक्रि-कलाप मलीक हिम (३) विधेहि तथा म-तिमेति यथा स-विधे म-यथा व्र-जभूम-हिम ॥ (४)

## सैव गान्ता माधवी ॥६२॥

उदा०—विलोल-विलोच-नकोण-विभाकि-तमोहि-तगोप-वधूज-नचित्त (१) मयूर-कलाप-विकम्पि-तमौलि-रपार-कलानि-धिवाल-चरित्र । (२) करोति मनो म न विम्ब-लमिन्दु-निभस्मि-तमुन्द-रकुन्द-सुदन्त (३) सखोमि-ति काऽपि जगाद हरे-र-नुराग-वशेन विभाव-तमन्त ॥ (४)

## डाष्टकचतुष्पदी मागधी ॥६३॥

उदा०—माधव ! विद्युदि-य गग ने तव कलयति पीतव-सनमभि-राम (१) जलधर नीलग-गनप-द्युतिरपि तव तनु-रुचिमनु-चरति नि-कामम् । (२) इन्द्रध-नुमन-मपि तव वक्षसि भासित-वरवन-माला-शोभ (३) कुरु मम वचन सकलय हृदय राधा-धरमधु विरचित लोभम् ॥ (४) मदिरादिवषा सवर्येति सञ्ज्ञा ।

## ठद्वय-डद्वय-लगैश्चतुष्पदं गलितकम् ॥६४॥

उदा०—मल्लिना (ठ) नतियूथि (ठ) पङ्कज—कुन्दक—लिके (१) कुमुदच (ठ) म्पककेत (ठ) किपरिम—लमन्द—लिके। (२) मलयप (ठ) वनशीत (ठ) लवि नातप—वन (३) हरिवियो (ठ) गितनीर (ठ) य मम कथ द—हन ॥ (४)

## ठद्वय-डद्वय-ठैश्चतुष्पद विगलितकम् ॥६५॥

उदा०—भवजलधि (ठ) तारिणि स (ठ) कलता—पहारि—णि गङ्गे (ठ) (१) चध-दहन (ठ) कारिणि क (ठ) चिधारि—णि हरज—तसङ्गे (ठ)। (२) गिरिनिकर (ठ) दारिणि म (ठ) नोहा—रिणि तर—लभङ्गे (ठ) (३) स्वपिमि वा (ठ) रिणि हस (ठ) हारिणि—तव विल—सदङ्गे (ठ) ॥ (४)

## डद्वय-ठाभ्या चतुष्पद सङ्गलितकम् ॥६६॥

उदा०—धृतिमव—धारय मानसे (१) हरिमपि गततनु—मानसे। (२) सखि तव वचन मानये (३) ननु वन—मालिन—मानये ॥ (४)

## ठद्वय-लगौ सुन्दरगलितकम् ॥६७॥

उदा०—विगलितचि (ठ) कुरविला (ठ) सिनी (१) नवहिमक (ठ) रनिभहा (ठ) सिनीम् । (२) सुरनरा (ठ) धिकान्ता (ठ) मये (३) तनुजितक (ठ) नकाङ्ग (ठ) मये ॥ (४)

### ठद्वय-ढद्वयाभ्यां भूषणगलितकम् ॥६८॥

उदा०—हर्षितरवे (ठ) पुविराव (ठ) ,विमो ढ) हिता (ढ) (१) द्रुतपदा (ठ) क्षतराव (ठ) रसे (ढ) हिता । (ढ) (२) हरिमदू (ठ) रवने ह (ठ) रिपो (ढ) वृषा (ढ) (३) समनुज (ठ) मुरमथ (ठ) गते (ढ) यथा ॥ (ढ) (४)

### ट-ढचतुष्टय-गैर्मुखगलितकम् ॥६९॥

उदा०—ब्रह्मभवा (ट) दिकमु (ढ) तपद (ढ) पङ्क (ढ) जयुग (ढ) ल (१) नाशितभ (ट) क्तहृद (ढ) यगत (ढ) दाव (ढ) पश्रम (ढ) लम् । (२) दीनकृपा (ट) निधिम (ढ) बजल (ढ) राशि (ढ) तार (ढ) क (३) नौमि हरि (ट) कमल (ढ) नयन (ढ) मशुभ (ढ) दार (ढ) कम ॥ (४)

### ट-गान्तडचतुष्टयाभ्यां विलम्बितगलितकम् ॥७०॥

उदा०—नमामि प (ट) ङ्कजान—न सक—लदु ख—हरण (१) मवाम्बुरा (ट) शितार—क निखि—लवन्द्य—चरणम् । (२) कपालली (ट) लकुण्ड—ल प्रज—बन्धुज—नहित (३) विलासहा (ट) सपेश-ल सर—सरास—महितम् ॥ (४)

### ड-ठद्वय-डद्वय-लगैः समगलितकम् ॥७१॥

उदा०—निखिलसु—रगणविनु (ठ) तपङ्कज (ठ) कोमल—चरणयु—गल (१) पीतव—सनविलसि (ठ) तशरीर (ठ) मनुत्त—मकम्बु—गलम् । (२) नौमि नि—गमपरिग (ठ) दितमपा (ठ) रगुणयु—तमिन्दु—सुख (३) नन्दत—नूज नि (ठ) खिलगोप (ठ) वधूज—नदत्त—सुखम् ॥ (४)

### यत्र ड-ढाभ्यामयुग्मौ ट-ढचतुष्टय-ठ-गैर्युग्मौ पादौ इत्थं चतुष्पदमपरं सङ्गलितकम् ॥७२॥

उदा०—विभूति—सित (ढ) (१) शिरास निवसि (ट) ताशु (ढ) पमन (ढ) दीभ (ट) वप (ढ) हुलविलसि (ठ) तम् । (२) चहिपत—सिरं (ढ) (३) किमपि विलस (ट) ताम्म (ढ) म हृदि (ढ) वेद (ढ) रह (ढ) स्यमतिसुचि (ठ) रम् ॥ (४)

### भज-डपञ्चक-गाभ्यां चतुष्पदमपरं विलम्बितगलितकम् ॥७३॥

उदा०—राजति वशी—हतमी—तत का—ननदे—शे (१) गच्छति कश्चे तशि—न्नथ म—ञ्जुलके—शो । (२) याहि म—या सा—र्द्धमितो रासा—हितचि—त्ते (३) तत्मवि—धे प्रे—मविलो—ले त—न च वि—त्ते ॥ (४)*

### ठ-ड-ठ-ड-ठ-गैश्चतुष्पदं विच्छित्तिकगलितकम् ॥७४॥

उदा०—चन्द्ररुचि (ठ) तमुकुट—मखिलमुनि (ठ) जनहृद—यसुखकर (ठ) च (१) धृतवेणु (ठ) कल व—रमकल (ठ) नव्या—द्भुत भर (ठ) चम। (२) वृन्दाव (ठ) नभूमि—षु वल्लव (ठ) नारी—मनोहर (ठ) च (३) रुचिर नि (ठ) जचेत—सि चिनय (ठ) गोव—र्द्धनोद्धर (ठ) चम॥ (४)

## ड-ठ-ड ठ-ड-गैर्ललितागलितकम्॥७५॥

उदा०—कमला—पति कम (ठ) लसुलो—चनमिन्दु (ठ) निभान—न (१) मञ्जुल—परिपीत (ठ) वासस—मपारगु (ठ) णकान—नम। (२) सनका—दिकमान (ठ) सजनित—निवासस (ठ) मसकु—स (३) प्रणमा—मि हरि मि (ठ) जभक्त—जनस्य ह (ठ) त निर—सम॥ (४)

## यत्र ठ-ड-ठ-ड-कमलैः (‿ - ‿ -) प्रथमद्वितीयपादौ ठत्रय-ड-सूर्य्यैश्च (‿ - ‿) तृतीयचतुर्थौ तद्विषमितागलितकम्॥७६॥

उदा०—वेण क (ठ) रे कल—यता सखि। (ठ) गोपकु—मारकेण (१) पीताम्ब (ठ) रावृत—शरीरभृ (ठ) ता भव—तारकेण। (२) प्रेमोद्ध (ठ) तस्मितव (ठ) चा वनज (ठ) भूषण—शोभिना (३) चेतो म (ठ) मापि कब (ठ) लीकृत (ठ) मानस—लोभिना॥ (४)

## ट-विषमज-डदशकचतुष्पद मालागलितकम्॥७७॥

उदा०—कालियकुल (ट) विभञ्ज (ज) कमसुर—विडम्ब—कदनुज—विलुम्प—कमखिल—जनसु—तगुभच—रित सु—निभृतं (१) नौमि विमल (ट) तर स (ज) कलसुख—कर क—लिकलुष—हर भ—वजलधि—तरि इ—विपा—लने सु—नियतम्। (२) कसर्द्दि वि (ट) कट मु (ज) निगणमि—कट वि—निहतश—कट प—विधृतमु—कुट ज—गदिर—चनेऽति—चतुर (३) भक्तजनम (ट) रण म (ज) वभयह—रण व—रसुखक—रण ख—पदवित—रण ज—गन्ना—थने घृ—तधुरम॥ (४)

## इदमेव डदयहीनञ्चेन्मुग्धमालागलितकम्॥७८॥

उदा०—वन्दे न (ट) न्दनन्द (ज) ननवन-रत न-रकततु-तनु धृ-तरुचि मुरारि-मौग (१) वादितव (ट) शमान (ज) तसुनिज-ननार दविरचि-तगान-

नवनी नवीन-नीरदम् । (२) कान्तितरा (ट) सहास (ज) परवश-रत वि-रचितसु-रत वि-ततकु-सुमेन पीत (३) त देव (ट) प्रमोद (ज) भरमुवि-दित मु-दितसुर-नुतं स-ततमा-त्मजेन गीतम् ॥ (४)

## तदाऽपि डद्वयन्यूनश्चेदुद्गलितकम् ॥९८॥

उदा०—नन्दनन्द (ट) नमव (ज) कलयत न किञ्च-दिह जग-ति सार-मपर (१) पुनरिव (ट) कलव (ज) माखिलम-पि चित्र-घटितमि-व भाति न परम । (२) सावधान (ट) तथैव (ज) लवमपि मन प-रमपद मिद न विदित (३) भावयन्तु (ट) दिवानि (ज) शमानमि-षमात्म-नि परम-पद प्र मुदितम् ॥ (४)

एव गलितकान्तानि वृत्तान्युक्तानि कानिचित् ।
लक्ष्याणि लक्ष्यमालक्ष्य शेषाणि निजबुद्धितः ॥

---

समाप्तोऽयं ग्रन्थः ।

# पिङ्गलच्छन्दःसूत्रस्य सूचीपत्रम् ।

## पञ्चमोऽध्याय: १९८ ८

## सप्तमोऽध्यायः ३२१ ७

## अष्टमोऽध्यायः ३६८ १

## परिशिष्टम् ।